

# श्रीपुरुषोत्तमयोगः

## श्रीमद्भगवद्गीता पाठशालार्थम्

शक १८४१.

Pr[illegible]ed and published by Maganlal Jagjivandas

at No. 355 Nagdevi Street near Mandvi

Post Office, Bombay. [312x76]

श्री भगवानुवाच ।

ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ १
अधश्चोर्ध्वं प्रसृतास्तस्य शाखा गुणप्रवृद्धा विषयप्रवालाः ।
अधश्च मूलान्यनुसन्ततानि कर्मानुबन्धीनि मनुष्यलोके ॥ २
न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च संप्रतिष्ठा ।
अश्वत्थमेनं सुविरूढमूलमसंगशस्त्रेण दृढेन छित्त्वा ॥ ३

---

ततः पदं तत् परिमार्गितव्यं यस्मिन्गता न निवर्तन्ति भूयः ।
तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी ॥ ४
निर्मानमोहा जितसंगदोषा अध्यात्मनित्या विनिवृत्तकामाः ।
द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैर्गच्छन्त्यमूढाःपदमव्ययं तत् ॥ ५
न तद्भासयते सूर्यो न शशांको न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥ ६

---

ममैवांशो जीवलोके जीवभूतः सनातनः ।
मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ ७
शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥ ८
श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।
अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९
उत्क्रामन्तं स्थितं वापि भुंजानं वा गुणान्वितम् ।
विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥ १०



## ॥ श्लोकः १ ॥

## ॥ श्रीभगवानुवाच ॥

ऊर्ध्वमूल  मधःशाख  मश्वत्थं प्राहु रव्ययम्
छन्दांसि  यस्य पर्णानि  यस्तं वेद स  वेदवित

### ॥ पदानि ॥

स.　　　स.　　　　ना.　क्रि.　स.
ऊर्ध्वमूलम् –अधःशाखम्–  अश्वत्थम्–प्राहुः+अव्ययम्
ना.　स.　ना.　　स.　स.　क्रि.　स.　स.
छन्दांसि –यस्य –पर्णानि–  यः+तम्–वेद–सः+वेदवित १३

### ॥ अन्वयः ॥

| संस्कृतम् | ગુજરાતી |
|---|---|
| १ श्रीभगवान् उवाच | શ્રીભગવાન્ બોલ્યા કે |
| २ ऊर्ध्वमूलम् | જેનું મૂળ ઉંચું છે |
| ३ अधःशाखम् | જેની શાખાઓ નીચે છે |
| ४ यस्य पर्णानि छन्दांसि | જેનાં પાંદડાં વેદો છે એવા |
| ५ यं अव्ययं अश्वत्थं प्राहुः | જે નાશરહિત અશ્વત્થનું વર્ણન [કરે છે |
| ६ तं यः वेद | તે અશ્વત્થને જે જાણે |
| ७ सः वेदवित् | તે વેદવેત્તા કહેવાય. |

---

## ॥ श्लोकः २ ॥

अधश्चोर्ध्वं प्रसृतास्तस्यशाखा गुणप्रवृद्धा विषयप्रवालाः
अधश्च मूलान्यनुसन्ततानि कर्मानुबन्धीनि मनुष्यलोके

### ॥ पदानि ॥

अ. अ. अ. वि. स. ना. स.
अधः+च+ऊर्ध्वम्–प्रसृताः+ तस्य–शाखाः+गुणप्रवृद्धाः+
स. अ. अ. ना. वि.
विषयप्रवालाः–अधः+च – मूलानि+अनुसन्ततानि–
स. स.
कर्मानुबन्धीनि–मनुष्यलोके १४

### ॥ अन्वयः ॥

| संस्कृतम् | ગુજરાતી |
|---|---|
| १ तस्य शाखाः | તે અશ્વત્થની શાખાઓ |
| २ अधश्च ऊर्ध्वंच प्रसृताः | નીચે અને ઉપર ફેલાયલી છે |
| ३ गुण–प्रवृद्धाः | ગુણોવડે વૃદ્ધી પામેલી છે |
| ४ विषय प्रवालाः | વિષયો જેમના પલ્લવ છે |
| ५ मनुष्यलोके | મનુષ્ય લોકમાં |
| ६ कर्मानुबन्धीनि | કર્મથી બંધન કરવાવાળાં |
| ७ तस्य मूलानि | તે અશ્વત્થનાં મૂળો |
| ८ अधश्च अनुसंततानि | નીચે પણ જડ ઘાલી બેઠાં છે. |

## ॥ श्लोकः ३ ॥

नरूपमस्येह तथोपलभ्यते नान्तो नचादिर्नच संप्रतिष्ठा
अश्वत्त्थमेनं सुविरूढमूल मसंगशस्त्रेण दृढेन छित्वा

### ॥ पदानि ॥

अ. ना. स. अ. अ. क्रि. अ. ना. अ. अ.
न—रूपम्—अस्य + इह—तथा+ उपलभ्यते—न+अन्तः+न—च+
ना. अ. अ. ना. ना. स. स.
आदिः+न—च—संप्रतिष्ठा – अश्वत्त्थम् – एनम्—सुविरूढमूलम्—
स. वि. कृ.
असंगशस्त्रेण—दृढेन—छित्वा २०

### ॥ अन्वयः ॥

| संस्कृतम् | ગુજરાતી |
|---|---|
| १ अस्य रूपम् | આ અશ્વત્ત્થનું સ્વરૂપ |
| २ इह तथा न उपलभ्यते | અહિયાં તેવું જણાતું નથી |
| ३ नान्तो न चादिः | અંત કે આદિ પણ જણાતો નથી |
| ४ न च संप्रतिष्ठा | તેમજ મધ્ય પણ જણાતો નથી |
| ५ सुविरूढमूलं एनं अश्वत्त्थं | બદ્ધમૂળ એવા આ અશ્વત્ત્થને |
| ६ दृढेन असंग शस्त्रेण छित्वा | તીવ્રવૈરાગ્યરૂપી શસ્ત્રવડે કાપીને |

---

## ॥ श्लोकः ४ ॥

ततः पदं तत्परिमार्गितव्यं यस्मिन्गता न निवर्तन्ति भूयः
तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी

## ॥ पदानि ॥

अ. ना. स. कृ. स. वि. अ.
ततः–पदम्–तत्–परिमार्गितव्यम्- यस्मिन्–गताः+न–
क्रि. अ. स. अ. अ. वि. ना. क्रि.
निवर्तन्ति–भूयः–तम्–एव –च+ आद्यम् – पुरुषम्– प्रपद्ये–
अ. ना. वि. वि.
यतः–प्रवृत्तिः–प्रसृता–पुराणी ११

## ॥ अन्वयः ॥

| संस्कृतम् | ગુજરાતી |
|---|---|
| १ ततः | ત્યારપછી |
| २ तत्पदं परिमार्गितव्यम् | તે પદ ગોતવા માંડવું કે |
| ३ यस्मिन् गताः | જેમાં ગએલા પુરૂષો |
| ४ भूयः न निवर्तन्ति | ફરીથી પાછા આવતા નથી [હું કે |
| ५ तमेव च आद्यं पुरुषं प्रपद्ये | તેજ આદિ પુરૂષને હું શરણે જાઉં |
| ६ यतः पुराणी प्रवृत्तिः प्रसृता | જેથી અનાદિ એવી પ્રવૃત્તિ [ચાલી રહી છે |

---

## ॥ श्लोकः ५ ॥

निर्मानमोहाजितसंगदोषा अध्यात्मनित्याविनिवृत्तकामाः
द्वंद्वैर्विमुक्ताः सुखदुःखसंज्ञै र्गच्छन्त्यमूढाः पदमव्ययंतत्

## ॥ पदानि ॥

स. स. स. स.
निर्मानमोहाः+जितसंगदोषाः+अध्यात्मनित्याः+विनिवृत्तकामाः
ना. वि. स. क्रि. स. ना.
द्वंद्वैः+विमुक्ताः – सुखदुःखसंज्ञैः+गच्छन्ति+अमूढाः –पदम् –
स. स.
अव्ययम्–तत् १२

## ॥ अन्वयः ॥

| संस्कृतम् | ગુજરાતી |
|---|---|
| १ निर्मानमोहाः | માન અને મોહથી રહિત એવા |
| २ जितसंगदोषाः | જીત્યા છે સંગદોષો જેઓએ એવા |
| ३ अध्यात्मनित्याः | અધ્યાત્મવિદ્યામાં રમી રહેલા [એવા |
| ४ विनिवृत्तकामाः | નિવૃત્ત થઇછે કામનાઓ જેમની [એવા |
| ५ सुखदुःखसंज्ञैःद्वंद्वैःविमुक्ताः | સુખદુઃખ નામના દ્વંદ્વોથી છુટેલા |
| ६ अमूढाः | વિદ્વાન્ પુરૂષો [એવા |
| ७ तत् अव्ययं पदं गच्छन्ति | તે અવ્યય પદને પામે છે. |

---

## ॥ श्लोकः ६ ॥

न तद्भासयते सूर्यो न शशांको न पावकः
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम

### ॥ पदानि ॥

अ. स. क्रि. ना. अ. ना. अ. ना.
न–तत्+भासयते – सूर्यः + न– शशांकः+न–पावकः–
स. कृ. अ. क्रि. अ. ना. वि. स.
यत् + गत्वा – न – निवर्तते – तत्+धाम–परमम्–मम १६

### ॥ अन्वयः ॥

| संस्कृतम् | ગુજરાતી |
|---|---|
| १ सूर्यः तत् न भासयते | સૂરજ તેને પ્રકાશિત કરી શકતો |
| २ न शशांको न पावकः | નહિ ચંદ્રમા કે નહિ અગ્નિ [નથી |
| ३ यत् गत्वा न निवर्तन्ते | જેને પામવાથી પાછા આવતા |
| ४ तत् मम परमं धाम | તે મારૂં પરમ ધામ કહેવાય.[નથી |

---

## ॥ श्लोकः ७ ॥

ममैवांशो जीवलोके जीवभूतः सनातनः
मनः षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति

### ॥ पदानि ॥

स. अ. ना. स. स. त.
मम+एव + अंशः + जीवलोके- जीवभूतः-सनातनः
स. ना. स. क्रि.
मनः षष्ठानि + इन्द्रियाणि- प्रकृतिस्थानि-कर्षति १०

### ॥ अन्वयः ॥

| संस्कृतम् | ગુજરાતી |
|---|---|
| १ जीव लोके जीवभूतः | પ્રાણી શરીરમાં જીવ બનેલો |
| २ सनातनः ममैव अंशः | સનાતન એવો મારોજ અંશ |
| ३ प्रकृतिस्थानि | પ્રકૃતિમાં રહેલી |
| ४ मनःषष्ठानि | મન છે છઠ્ઠું જેમાં એવી |
| ५ इन्द्रियाणि कर्षति | ઇંદ્રિયોને ખેંચેછે. |

---

## ॥ श्लोकः ८ ॥

शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात्

### ॥ पदानि ॥

ना. स. क्रि. स. अ. अ. क्रि. ना.
शरीरम्-यत्+अवाप्नोति-यत्+च+अपि+उत्क्रामति+ईश्वरः
कृ. स. क्रि. ना. ना. अ. ना.
गृहीत्वा+एतानि-संयाति-वायुः+गन्धान्-इव+आशयात् १५

॥ अन्वयः ॥

| संस्कृतम् | ગુજરાતી |
|---|---|
| १ यत् शरीरं अवाप्नोति | એટલે કે જે શરીરને પામે છે |
| २ अपि च यत् | અને વળી જે |
| ३ ईश्वरः सन् उत्क्रामति | ઇશ્વર છતાં મરણ પામે છે |
| ४ तत् एतानि गृहीत्वा संयाति | તે એમને લઈ જાય છે |
| ५ आशयात् वायुः गन्धानिव | જેમ ફુલમાંથી પવન ગંધને લઈ [જાય તેમ |

---

## ॥ श्लोकः ९ ॥

श्रोत्रं चक्षुः स्पर्शनंच रसनं घ्राणमेवच

अधिष्ठाय मनश्चायं विषयानुपसेवते

॥ पदानि ॥

ना. ना. ना. अ. ना. ना. अ. अ.

श्रोत्रम् – चक्षुः–स्पर्शनम् – च– रसनम्–घ्राणम्–एव–च

कृ. ना. अ. स. ना. क्रि.

अधिष्ठाय–मनः +च + अयम्– विषयान्–उपसेवते १४

॥ अन्वयः ॥

| संस्कृतम् | ગુજરાતી |
|---|---|
| १ श्रोत्रं चक्षुः स्पर्शनं च | કાન આંખ અને ત્વચા |
| २ रसनं घ्राणमेव च | જીભ અને નાક |
| ३ मनश्च अधिष्ठाय | તેમજ મનનો પણ ઉપરી થઈ |
| ४ अयं विषयान् उपसेवते | આ જીવાત્મા વિષયોનો ઉપ- [ભોગ લે છે |

---

## ॥ श्लोकः १० ॥

उत्क्रामन्तं स्थितं वापि भुंजानं वा गुणान्वितम्
विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः

### ॥ पदानि ॥

कृ. वि. अ. अ. कृ. अ. स.
उत्क्रामन्तम्–स्थितम्–वा+अपि– भुंजानं–वा–गुणान्वितम्–
वि. अ. क्रि. क्रि. स.
विमूढाः + न + अनुपश्यन्ति– पश्यन्ति–ज्ञानचक्षुषः १२

### ॥ अन्वयः ॥

| संस्कृतम् | ગુજરાતી |
|---|---|
| १ उत्क्रामन्तं | મરણ પામતો હોય તે વેળાએ |
| २ स्थितं वापि | અથવા તો બેઠો હોય તે વેળાએ |
| ३ वा गुणान्वितं सन्तं | અથવા તો ગુણોવડે યુક્ત થઇ |
| ४ भुंजानं | ઉપભોગ લેતો હોય તે ટાણે |
| ५ एनं विमूढाः नानुपश्यन्ति | એને અજ્ઞાનીઓ જોઇ શકતા નથી |
| ६ ज्ञानचक्षुषः पश्यन्ति | માત્રજ્ઞાનચક્ષુવાળાઓજોઇશકેછે |

---

## ॥ श्लोकः ११ ॥

यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम्
यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः

## ॥ पदानि ॥

कृ. त. अ. स. क्रि. ना. वि.

**यतन्तः+योगिनः+च + एनम्--पश्यन्ति+आत्मनि+अवस्थितम्**

कृ. अ. स. अ. स. क्रि. स.

**यतन्तः+अपि+अकृतात्मानः+न+एनम्-पश्यन्ति+अचेतसः १४**

## ॥ अन्वयः ॥

| संस्कृतम् | ગુજરાતી. |
|---|---|
| १ यतन्तो योगिनश्च | અભ્યાસી એવા યોગીઓ તો |
| २ एनंआत्मनि अवस्थितंपश्यन्ति | એને ચિત્તમાં બિરાજમાન [ થએલો જુવે છે. |
| ३ यतन्तोऽपि | યત્ન કરતાં છતાં પણ |
| ४ अकृतात्मानः | અશુદ્ધ અન્તઃકરણવાળા |
| ५ अचेतसः | જડમતીઓ |
| ६ एनं न पश्यन्ति | એને જોઈ શકતા નથી. |

---

## ॥ श्लोकः १२ ॥

**यदादित्यगतं तेजो जगद्भासयतेऽखिलम्**
**यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्**

## ॥ पदानि ॥

स. स. ना. ना. क्रि. वि.

**यत् + आदित्यगतम् – तेजः+जगत् + भासयते + अखिलम्**

स. ना. स. अ. ना. स. ना. क्रि. त.

**यत् +चन्द्रमसि–यत् +च +अग्नौ-तत्-तेजः+विद्धि-मामकम् १५**

## ॥ अन्वयः ॥

| संस्कृतम् | ગુજરાતી. |
| --- | --- |
| १ यत् आदित्यगतं तेजः | જે સૂર્યમાં રહેલું તેજ |
| २ अखिलं जगत् भासयते | આખા જગતને પ્રકાશિત કરે છે |
| ३ यत् चन्द्रमसि यच्च अग्नौ | જે ચંદ્રમાં અને જે અગ્નિમાં |
| ४ तत् तेजः मामकं विद्धि | તે તેજ મારૂં જાણ. [તેજ છે |

---

## ॥ श्लोकः १३ ॥

गामाविश्य च भूतानि धारयाम्यहमोजसा
पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः

## ॥ पदानि ॥

ना. क्. अ. ना. क्रि. स. ना.
गाम्–आविश्य–च – भूतानि– धारयामि+अहम्–ओजसा
क्रि. अ. ना. स. ना. क्. स.
पुष्णामि–च+ओपधीः–सर्वाः– सोमः+भूत्वा–रसात्मकः १४

## ॥ अन्वयः ॥

| संस्कृतम् | ગુજરાતી |
| --- | --- |
| १ गां आविश्यच | તેમજ પૃથ્વીમાં પેસીને |
| २ ओजसा | પોતાના તેજથી |
| ३ अहं भूतानि धारयामि | હું પ્રાણીઓને ધારણ કરૂં છું, |
| ४ रसात्मकः सोमो भूत्वा | રસસ્વરૂપી સોમ થઇને |
| ५ सर्वाः ओपधीः पुष्णामि | સર્વ ઔષધીનું પોષણ હું કરૂં છું. |

---

## ॥ श्लोकः १४ ॥

अहं वैश्वानरो भूत्वा    प्राणिनां देहमाश्रितः
प्राणापानसमायुक्तः    पचाम्यन्नं चतुर्विधम्

### ॥ पदानि ॥

स.    ना.    कृ.    ना.    ना.    वि.
अहम् – वैश्वानरः + भूत्वा–  प्राणिनाम्–देहम्–आश्रितः–
स.    क्रि.    ना.    स.
प्राणापानसमायुक्तः–पचामि +  अन्नम्–चतुर्विधम्    १०

### ॥ अन्वयः ॥

| संस्कृतम् | ગુજરાતી |
|---|---|
| १ अहं वैश्वानरो भूत्वा | હું જઠરાગ્નિ થઈ |
| २ प्राणिनां देहं आश्रितः सन् | પ્રાણીઓના દેહનો આશ્રયકરી |
| ३ प्राणापान समायुक्तः सन् | પ્રાણ અને અપાનથી યુક્ત થઇ |
| ४ चतुर्विधं अन्नं पचामि | ચાર પ્રકારનું અનાજ પચાવું છું. |

---

## ॥ श्लोकः १५ ॥

सर्वस्य चाहं हृदि सन्निविष्टो    मत्तःस्मृतिर्ज्ञानमपोहनं च
वेदैश्च सर्वैरहमेव वेद्यो    वेदान्तकृद्वेदविदेव चाहम्

## ॥ पदानि ॥

स. अ. स. ना. वि. त. ना.

**सर्वस्य – च + अहम्–हृदि– संनिविष्टः+मत्तः–स्मृतिः+**

ना. ना. अ. ना. अ. स. स. अ.

**ज्ञानम्–अपोहनम् – च–वेदैः+च– सर्वैः+अहम्–एव–**

कृ. स. स. अ. अ. स.

**वेद्यः+वेदान्तकृत्+वेदवित् +एव–च+ अहम् २१**

## ॥ अन्वयः ॥

| संस्कृतम् | ગુજરાતી |
|---|---|
| १ अहंच | વળી હું |
| २ सर्वस्य हृदि संनिविष्टः | સૌના હૃદયમાં પેઠેલો છું |
| ३ मत्तः स्मृतिः | મારાથી સ્મરણ |
| ४ ज्ञानं अपोहनंच | જ્ઞાન અને અજ્ઞાન પણ થાયછે |
| ५ सर्वैः वेदैश्च | તેમજ સર્વે વેદોવડે |
| ६ अहमेव वेद्यः | હું જાણવા યોગ્ય છું |
| ७ वेदान्तकृत् | વેદાન્ત શાસ્ત્ર રચવાવાળો |
| ८ वेदविच्च अहमेव | અને વેદને જાણવાવાળો હુંજ છું. |

---

## ॥ श्लोकः १६ ॥

**द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एवच**

**क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते**

## ॥ पदानि ॥

स. स. ना. ना. वि. अ. स. अ. अ.
द्वौ + इमौ – पुरुषौ – लोके– क्षरः+च+अक्षरः+एव–च
वि. स. ना. स. स. क्रि.
क्षरः–सर्वाणि–भूतानि-कूटस्थः+ अक्षरः+उच्यते १५

## ॥ अन्वयः ॥

| संस्कृतम् | ગુજરાતી |
|---|---|
| १ लोके इमौ द्वौ पुरुषौ | લોકમાં આ બે પુરૂષો છે |
| २ क्षरश्चाक्षर एवच | એક ક્ષર અને બીજો અક્ષર |
| ३ सर्वाणि भूतानि क्षरः | સર્વ ભૂતો તે ક્ષર પુરૂષ |
| ४ कूटस्थः अक्षरःउच्यते | અને પ્રકૃતિ તે અક્ષર પુરૂષ [કહેવાય છે. |

---

## ॥ श्लोकः १७ ॥

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः

## ॥ पदानि ॥

वि. ना. अ. स. ना. अ. वि.
उत्तमः – पुरुषः+तु + अन्यः– परमात्मा+इति+उदाहृतः
स. स. कृ. क्रि. स. ना.
यः + लोकत्रयम् – आविश्य– बिभर्ति+अव्ययः + ईश्वरः १३

॥ अन्वयः ॥

| संस्कृतम् | ગુજરાતી |
|---|---|
| १ उत्तमः पुरुषस्तु अन्यः | ઉત્તમ પુરૂષતો જુદોજ છે |
| २ परमात्मेति उदाहृतः | જેને પરમાત્મા એમ નામ અપાય |
| ३ यो लोकत्रयं आविश्य | જે ત્રણે લોકમાં પેસી [છે |
| ४ बिभर्ति | ધારણ અને પોષણ કરે છે |
| ५ यः अव्ययः ईश्वरः | જે અવ્યય અને ઈશ્વર છે. |

---

## ॥ श्लोकः १८ ॥

यस्मात् क्षरमतीतोऽह मक्षरादपि चोत्तमः
अतोऽस्मि लोके वेदेच प्रथितः पुरुषोत्तमः

॥ पदानि ॥

म. वि. वि. स. स. अ. अ. वि.
यस्मात् – क्षरम्– अतीतः + अहम्–अक्षरात्+अपि–च+उत्तमः
त. क्रि. ना. ना. अ. वि. ना.
अतः+अस्मि–लोके–वेदे–च– प्रथितः – पुरुषोत्तमः १५

॥ अन्वयः ॥

| संस्कृतम् | ગુજરાતી |
|---|---|
| १ यस्मात् | જે કારણથી |
| २ अहं क्षरं अतीतः | હું ક્ષર કરતાં પર છું |
| ३ अक्षरादपि च उत्तमः | અને અક્ષર કરતાં પણ ઉત્તમ છું |
| ४ अतः | એટલા માટે |
| ५ लोके वेदे च | લોકમાં તેમજ વેદમાં |
| ६ पुरुषोत्तम इति | પુરૂષોત્તમ આ નામથી |
| ७ प्रथितः अस्मि | હું પ્રસિદ્ધ થયો છું |

## ॥ श्लोकः १९ ॥

यो मामेवमसंमूढो जानाति पुरुषोत्तमम्
स सर्वविद्भजति मां सर्वभावेन भारत

### ॥ पदानि ॥

स. स. अ. स. क्रि. स.
यः+माम्–एवम् – असंमूढः + जानाति–पुरुषोत्तमम्
स. स. क्रि. स. स. त.
सः+सर्ववित् + भजति–माम्– सर्वभावेन–भारत १२

### ॥ अन्वयः ॥

| संस्कृतम् | ગુજરાતી |
|---|---|
| १ असंमूढः यः | મોહરહિત એવા જે કોઈ [જાણે |
| २ एवं मां पुरुषोत्तमं जानाति | એવીરીતે મને પુરૂષોત્તમ એમ |
| ३ हे भारत | હે ભરતકુળમાં ઉત્પન્ન થયેલ |
| ४ सः सर्ववित् | તે સર્વવેત્તા પુરૂષ [અર્જુન |
| ५ मां सर्वभावेन भजति | મને સર્વ ભાવથી ભજે છે. |

---

## ॥ श्लोकः २० ॥

इति गुह्यतमं शास्त्र मिदमुक्तं मयानघ
एतद्बुध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत

## ॥ पदानि ॥

अ. त. ना. स. वि. स. स.

इति–गुह्यतमम्–शास्त्रम्–इदम्– उक्तम्–मया+अनघ

स. कृ. त. क्रि. स. अ. त.

एतत् + बुध्वा – बुद्धिमान् – स्यात्-कृतकृत्यः+च-भारत १४

## ॥ अन्वयः ॥

| संस्कृतम् | ગુજરાતી |
| --- | --- |
| १ हे अनघ | હે નિષ્પાપ અર્જુન |
| २ इति मया उक्तम् | એવી રીતે મેં કહેલું |
| ३ इदं शास्त्रं गुह्यतमम् | આ શાસ્ત્ર અત્યન્ત ગુહ્ય છે |
| ४ हे भारत | હે ભરતવંશમાં ઉત્પન્ન થએલ |
| ५ एतत् बुध्वा | આ શાસ્ત્રને જાણવાથી [અર્જુન |
| ६ बुद्धिमान् स्यात् | માણસ બુદ્ધિશાળી થાય છે |
| ७ कृतकृत्यश्च स्यात् | અને મુક્ત થઈ જાય છે. |

---

॥ इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे पुरुषोत्तमयोगो नाम पंचदशोऽध्यायः ॥

॥ श्रीकृष्णार्पणमस्तु ॥

ॐ

# ॥ पदकृत्यं. ॥

## ॥ श्लोक १ ॥

१ उवाच– ब्रूञ्–व्यक्तायां वाचि, ब्रवीति ब्रूतः ब्रुवन्ति.

२ ऊर्ध्वमूलम् – ऊर्ध्वं+ मूलं यस्य सः= ऊर्ध्वमूलः, तम्.

३ अधःशाखम् – अधः + शाखाः यस्य सः=अधःशाखः, तम्.

४ प्राहुः – ब्रूञ् – व्यक्तायां वाचि, ब्रवीति ब्रूतः ब्रुवन्ति.

५ अव्ययम् – न विद्यते + व्ययः यस्य सः=अव्ययः, तम्.

६ वेद–विद–ज्ञाने, वेत्ति वित्तः विदन्ति.

७ वेदवित्–वेदं वेत्तीति.

## ॥ श्लोक २ ॥

१ गुणप्रवृद्धाः – गुणैः + प्रवृद्धाः =गुणप्रवृद्धाः.

२ विषयप्रवालाः–विषयाः+ प्रवालाः यासां ताः=विषयप्रवालाः.

३ कर्मानुबन्धीनि–कर्म+ अनुबन्धुं शीलं येषां तानि=कर्मानुबन्धीनि.

४ मनुष्यलोके–मनुष्याणां+लोकः= मनुष्यलोकः, तस्मिन्.

## ॥ श्लोक ३ ॥

१ उपलभ्यते – डुलभष् = प्राप्तौ, लभते.

२ सुविरूढमूलं–सुष्ठु+विरूढानि= सुविरूढानि, सुविरूढानि+ मूलानि यस्य सः=सुविरूढ मूलः, तम्.

३ असंगशस्त्रेण–न+संगः= असंगः, असंग एव+शस्त्रं=असंगशस्त्रं, तेन.

४ छित्वा–छिदिर्–द्वैधी करणे, छिनत्ति छिन्तः छिन्दन्ति.

## ॥ श्लोक ४ ॥

१ परिमार्गितव्यम्–मृग–अन्वेषणे मृगयते.

२ निवर्तन्ति–वृतु–वर्तने, वर्तते.

३ प्रपद्ये–पद–गतौ, पद्यते.

## ॥ श्लोक ५ ॥

१ निर्मानमोहाः—मानश्च+मोहश्च= मानमोहौ, निर्गतौ+मानमोहौ येभ्यस्ते= निर्मानमोहाः.

२ जितसंगदोषाः — संगात् + दोषाः=संगदोषाः, जिताः+संग-दोषाः यैस्ते=जितसंगदोषाः.

३ अध्यात्मनित्याः — आत्मनि + इति=अध्यात्मम्. अध्यात्मम् + नित्याः= अध्यात्मनित्याः.

४ विनिवृत्तकामाः— विनिवृत्ताः+ कामाःयेभ्यस्ते =विनिवृत्तकामाः.

५ सुखदुःखसंज्ञैः — सुखानिच + दुःखानिच=सुखदुःखानि. सुख दुःखानि + संज्ञाःयेषां तानि= सुखदुःखसंज्ञानि, तैः.

६ गच्छन्ति=गम्लृ—गतौ—गच्छति.

७ अमूढाः=न+मूढाः=अमूढाः.

## ॥ श्लोक ६ ॥

१ भासयते—भासृ—दीप्तौ, भासते ( णिच् ).

## ॥ श्लोक ७ ॥

१ जीवलोके—जीवानां+ लोकः= जीवलोकः, तस्मिन्.

२ जीवभूतः—जीव इव=जीवभूतः.

३ सनातनः— सना—भावः=सना-तनः.

४ मनःषष्ठानि — मनः+ षष्ठं येषु, तानि=मनःषष्ठानि.

५ कर्षति—कृष्—विलेखने.

## ॥ श्लोक ८ ॥

१ अवाप्नोति— आप्लृ— व्याप्तौ, आप्नोति, आप्नुतः आप्नुवन्ति.

२ उत्क्रामति—क्रमु—पाद विक्षेपे.

३ गृहीत्वा—गृह्ण—ग्रहणे, गृह्णाति गृह्णितः गृह्णन्ति.

४ या—प्रापणे, याति यातः यान्ति.

## ॥ श्लोक ९ ॥

१ अधिष्ठाय— ष्ठा— गतिनिवृत्तौ, तिष्ठति.

२ उपसेवते—षेवृ—सेवने.

## ॥ श्लोक १० ॥

१ उत्क्रामन्तम् — उत्क्रामतीति= उत्क्रामन्, तं.

२ भुंजानम्—भुंक्ते इति=भुंजानः, तं. भुज्— पालनाभ्यवहारयोः, भुंक्ते भुंजाते भुंजते.

३ गुणान्वितम्—गुणैः+आन्वितः= गुणान्वितः, तं.

४ अनुपश्यन्ति—दृशिर्— प्रेक्षणे, पश्यति.

५ ज्ञानचक्षुषः— ज्ञानमेव+ चक्षुः येषान्ते.

## ॥ श्लोक ११ ॥

१ यतन्तः — यतन्तीति, यती— प्रयत्ने, यतति, ते.

२ योगिनः—योगःयेषामस्तीति.

३ अकृतात्मानः — न + कृतः= अकृतः, अकृतः+आत्मा यैस्ते.

४ अचेतसः — नविद्यते + चेतः येषान्ते.

## ॥ श्लोक १२ ॥

१ आदित्यगतम्—आदित्यं+गतं= आदित्यगतं.

२ विद्धि—विद—ज्ञाने, वेत्ति वित्तः विदन्ति.

३ मामकम् —मम इदम् =मामकम्.

## ॥ श्लोक १३ ॥

१ गाम्—गौः गावौ गावः.

२ आविश्य — विश — प्रवेशने, विशति.

३ धारयामि—धृञ्—धारणे, धरति ( णिच् ).

४ पुष्णामि—पुष्—पुष्टौ, पुष्णाति पुष्णीतः पुष्णन्ति.

५ भूत्वा—भू—सत्तायां, भवति.

६ रसात्मकः — रसएव + आत्मा यस्य सः=रसात्मकः.

## ॥ श्लोक १४ ॥

१ प्राणिनाम्—प्राणाः येषां सन्ती- ति= प्राणिनः, तेषाम्.

२ प्राणापानसमायुक्तः— प्राणश्च+अपानश्च=प्राणापानौ, प्राणापानाभ्यां+समायुक्तः = प्राणापानसमायुक्तः.

३ पचामि—डुपचप्—पाके, पचति.

४ चतुर्विधम् — चतस्त्रः+ विधाः यस्य तत्=चतुर्विधम.

॥ श्लोक १५ ॥

१ मत्तः—मत् इति=मत्तः.

२ वेद्यः—वेदितुं योग्यः=वेद्यः.

३ वेदान्तकृत्—वेदान्तं करोतीति=वेदान्तकृत. डुकृञ् – करणे करोति कुरुतः कुर्वन्ति.

॥ श्लोक १७ ॥

१ लोकत्रयम—लोकानां+त्रयम्.

२ बिभर्ति—डुभृञ्—धारण पोषणयोः बिभर्ति बिभृतः बिभ्रति.

॥ श्लोक १८ ॥

१ अस्मि – अस – भुवि, अस्ति स्तः सन्ति.

२ पुरुषोत्तमः—पुरुषयोः+उत्तमः=पुरुषोत्तमः.

॥ श्लोक १९ ॥

१ असंमूढः—न+संमूढः=असंमूढः.

२ जानाति – ज्ञा – अवबोधने. जानाति जानीतः जानन्ति.

३ सर्ववित्—सर्वं वेत्तीति.

४ भजति—भज—सेवायां, भजति.

५ सर्वभावेन – सर्वस्य + भावः= सर्वभावः, तेन.

६ भारत—भरतस्य अपत्यं पुमान्=भारतः, तत्संबुद्धौ, हे भारत.

॥ श्लोक २० ॥

१ गुह्यतमम्—अतिशयेन गुह्यं.

२ अनघ—नविद्यते+अघं यस्य सः =अनघः, तत्संबुद्धौ.

३ बुध्वा—बुध—अवगमने, बोधति.

४ बुद्धिमान्—बुद्धिः अस्यास्तीति.

५ कृतकृत्यः—कृतं+कृत्यं येन सः= कृतकृत्यः.

यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।
यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥ ११

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥ १२
गामाविश्य च भूतानि धारयाम्यहमोजसा ।
पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥ १३
अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ १४
सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च ।
वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ॥ १५

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १६
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ १७
यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ १८
यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ॥ १९
इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ ।
एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत ॥ २०

ॐ इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
पुरुषोत्तमयोगो नाम पञ्चदशोऽध्यायः ॥

॥ श्रीकृष्णार्पणमस्तु ॥

